॥ श्रीः ॥

सहृदयासंस्कृतग्रन्थावलिः—३.

# तिलकमञ्जरीसंग्रहः ॥

[illegible]भट्टबाणादिविरुदभाजा वासवदत्ताप्रभृतीनामनेकेषां बन्धानां व्याख्यात्रा सहृदयासहकारिसंपादकेन

वात्स्यचक्रवर्तिना श्रीकृष्णसूरिणा

संकलितः ।



श्रीरङ्गस्थ

श्रीवाणीविलासमुद्रायन्त्रालये

संमुद्रितः ।

१९०९.

॥ श्रीः ॥

सहृदयासंस्कृतग्रन्थावलिः—३.

# ...लकमञ्जरीसंग्रहः ॥

...ट्टबाणादिबिरुदभाजा वासवदत्ताप्रभृतीनामनेकेषां
...न्धानां व्याख्यात्रा सहृदयासहकारिसंपादकेन
वात्स्यचक्रवर्तिना श्रीकृष्णसूरिणा
संकलितः ।








श्रीरङ्गस्थ
श्रीवाणीविलासमुद्रायन्त्रालये
संमुद्रितः ।
१९०९.

॥ श्रीः ॥

## ॥ विज्ञापना ॥

---

आर्याः, विदितमेवेदं भवतां महिम्नः, यदुत बाणभट्टगद्यकाव्योपजीविनां गद्यसंदर्भाणामयमप्यन्यतमो धनपालकविविरचितस्तिलकमञ्जरीप्रबन्ध इति। अयं च ग्रन्थो निर्णयसागरमुद्रालयान्मुद्रापयित्वा यद्यपि बहिरवतारितः, तथापि तत्र दुःसहानामशुद्धीनामापतनान्न तावते फलाय कल्पते, यावते भाव्यमेनेन। तत्र च वितुषीकरणाय प्रवृत्तो न कश्चिदपि संपूर्णं साफल्यं विन्देतेति दर्शनमात्र एव सचेतसां प्रतिभास्यति। अहं च समधिकं परिश्रमं स्वीकृत्य यावन्मति अशुद्धीः परिहृत्य प्रायेण तादृशानि स्थलानि अत्र घटयित्वा तिलकमञ्जरीसंग्रहनामकमेतं सन्दर्भं सह टिप्पण्या सहृदयाद्वारा बहिरवातारयम्। अस्य चायं प्रथमो भागः। क्रमेण च भविष्यन्ति भागान्तराणि। यथामतिवैभवं सर्वतः समालोच्य प्रकटितेऽत्र प्रबन्धे पाठतो व्याख्यानतश्च वैलक्षण्यं गद्यकाव्यपरिशीलिनः स्वयमेव ज्ञास्यन्ति भावुका इत्यलमधिकावेदनेन।

श्रीरङ्गनगरम्।
२६—१—९०९.

इति
विदुषामनुचरः
रा. चक्रवर्ति-कृष्णमाचार्यः।



॥ श्रीः ॥

# ॥ तिलकमञ्जरीसंग्रहः ॥



प्राज्यप्रभावः प्रभवो धर्मस्यास्तरजस्तमाः ।
ददतां निर्वृतात्मा न आद्योऽन्येऽपि मुदं जिनाः ॥ १ ॥

वन्द्यास्ते कवयः काव्यपरमार्थविशारदाः ।
विचारयन्ति ये दोषान्गुणांश्च गतमत्सराः ॥ २ ॥

शे षे से वा विशेषं ये न जानन्ति द्विजिह्वतः ।
यान्तो हीनकुलाः किं ते न लज्जन्ते मनीषिणाम् ॥ ३ ॥

---

**प्राज्येति** । ददतामित्येतत्, 'दद दाने' इति भौवादिकाल्लोटि एकवचने, 'डुदाञ् दाने' इति जौहोत्यादिकाल्लोटि बहुवचनं च निष्पद्यते । क्रमेण तस्यान्वयः । आद्यजिनपक्षे, निर्वृतात्मा, नः, इति च्छेदः । प्रभवः उत्पत्तिस्थानम् । निर्वृतात्मा सानन्दमनाः मुक्तात्मा वा । पक्षान्तरे, प्राज्यप्रभाः, वः, इति च्छेदः । प्रभुशब्दस्य बहुवचने प्रभव इति, अस्तरजःशब्दात्तमपि ततो बहुवचने अस्तरजस्तमा इति च भवति ।

**शेष इति** । हीनकुलाः ये । शे शकारे । षे षकारे । से वा सकारे वा । विशेषं परस्परभेदम् । न जानन्ति, अश्वे अस्वं दोषे दोशं च प्रयुञ्जत इत्यर्थः, अनभिज्ञमूर्धन्या इति यावत् । द्वयोः जिह्वयोः समाहारः द्विजिह्वं तेन तस्माद्वा द्विजिह्वतः, पैशुनवृत्त्येत्यर्थः । 'आवन्तो वा' इत्युक्तया क्लीबत्वम् । यान्तः सर्वत्र गच्छन्तः, व्यवहरन्त इत्यर्थः । ते मनीषिणां मनीषिणः प्रति । संबन्ध-

स्वादुतां मधुना नीताः पशूनामपि मानसम् ।
मदयन्ति न यद्वाचः किं तेऽपि कवयो भुवि ॥ ४ ॥

प्रस्तावनादिपुरुषौ रघुकौरववंशयोः ।
वन्दे वाल्मीकिकानीनौ सूर्याचन्द्रमसाविव ॥ ५ ॥

---

सामान्ये षष्ठी । किं न लज्जन्ते तैरवश्यमेव लज्जितव्यमिति भावः । किं कुतः न लज्जन्ते लज्जितव्येऽपि तेषामलज्जा केवलं हीनकुलत्वादिप्रयुक्तैव स्यादिति भाव इति वा । पक्षे सेवाः, विशेषम्, ही, नकुलाः, इति छेदः । ही इति हासे । ये नकुलाः । यान्तः सर्पभुजो वयमित्यभिमानेन सर्वानपि सर्पानभियान्तः सन्तः । शेषे सर्पराजे । द्विजिह्वतः अन्येभ्यो भुजगेभ्यः । विशेषं सर्पराजत्वसहस्रफणत्वदुर्विषहविषत्वविष्णुतल्पत्वादिरूपं बहुमानाधायकं व्यावर्तकाकारम् । न जानन्ति । सेवाः उक्तविशेषाकारसत्त्वान्नायं साधारणभुजङ्गवदस्माकं द्वेष्यकोटिं तिरस्कार्यपदवीं वार्हति, परं त्वस्माभिरेवायं सेवनीय इति बुद्ध्या कर्तव्यानि शुश्रूषणानि च । न जानन्ति । सेवाविशेषमित्येकं पदं वा । अन्यत्स्पष्टम् । 'सेवा वशेषम्' इति पाठे तु, वशेषमिति भावप्रधानो निर्देशः । वशेषं वात् वकारात् शेषं शेषतां परत्वमित्यर्थः । न जानन्ति, शकारषकारसकाराः वर्णमालायां वकारात्परा इत्येवमक्षरमातृकामपि ये न जानन्तीत्यर्थः । पक्षे, सेवावशे शेषे । पं प्राधान्यं ये न जानन्तीत्यर्थो बोध्यः । यद्वा द्विजिह्वतः सर्पान्तरापेक्षया शेषे सेवाः वशेषं निःशेषं यथा तथा न जानन्तीत्यर्थो बोध्यः । वागुरिमतेन अवस्याकारलोपः । शेषद्विजिह्वादिपदसांनिध्यस्वारस्यपर्यालोचनायां नकुलपरत्वेनैवार्थान्तरपरत्वमत्र युक्तमुत्पश्यामः ।

**स्वादुतामिति** । मधुना माधुर्यगुणेन । पक्षे, वसन्तेन मकरन्देन वा । तेऽपि कवयः किम् । पक्षे, ते पिकवयः कोकिलपक्षिणः किम् । पिकविशब्दाद्बहुवचने पिकवय इति रूपम् । विशब्दः पक्षिवाची ।

**प्रस्तावनेति** । कानीनः कन्यायां जातः व्यासः । 'कन्यायाः कनीन च' इत्यपत्यार्थे अण्प्रत्यये प्रकृतेः कनीनादेशः ।

सत्यं बृहत्कथाम्भोधेर्बिन्दुमादाय संस्कृताः ।
तेनेतरकथाः कन्थाः प्रतिभान्ति तदग्रतः ॥ ६ ॥

आसीद्विजन्माखिलमध्यदेशे
प्रकाशसाङ्काश्यनिवेशजन्मा ।
अलब्ध देवर्षिरिति प्रसिद्धिं
यो दानवर्षित्वविभूषितोऽपि ॥ ७ ॥

शास्त्रेष्वधीती कुशलः कलासु
बन्धे च बोधे च गिरां प्रकृष्टः ।
तस्यात्मजन्मा समभून्महात्मा
देवः स्वयंभूरिव सर्वदेवः ॥ ८ ॥

तज्जन्मा जनकाङ्घ्रिपङ्कजरजःसेवाप्तविद्यालवो
विप्रः श्रीधनपाल इत्यविशदामेतामबध्नात्कथाम् ।

---

**सत्यमिति** । बिन्दुः कणः, अनुस्वारश्च । संस्कृताः परिष्कृताः, परसवर्णरूपं शब्दशास्त्रसंस्कारं प्रापिताश्च । 'कथा' इति पदं अनुस्वारयोजने परसवर्णे च कृते 'कन्था' इति भवति । 'आसीद्बिन्दुस्ततो नादो नादाच्छक्तिसमुद्भवः' 'बिन्दुमात्रं विशिष्यते' इत्यादिषु बिन्दुशब्दोऽनुस्वारपर इति सुप्रसिद्धम् । बिल्हणोऽपि 'बिन्दुद्वन्द्वतरङ्गिताग्रसरणिः कर्ता शिरोबिन्दुकं कर्मेति क्रमशिक्षितान्वयकथा ये केऽपि तेभ्यो नमः' इति कर्णसुन्दर्यामाह ।

**आसीदिति** । दानवर्षित्वं असुरमुनित्वम्, दानं वर्षतीति तस्य भावश्च ।

**शास्त्रेष्विति** । अत्र एभिर्विशेषणैरेतादृश एव महान् स्वयं प्रबन्धुं प्रभवति परनिबन्धस्वारस्यमपि वेदितुमर्हति, न त्वतथाविधो मिथ्यापाण्डित्याभिनयेन परान्वञ्चयन्विकत्थनः परोत्कर्षासहिष्णुः पिशुन इति सूचितम् ।

अक्षुण्णोऽपि विविक्तसूक्तिरचने यः सर्वविद्याब्धिना
श्रीमुञ्जेन सरस्वतीति सदसि क्षोणीभृता व्याहृतः ॥१॥

अस्ति रम्यतानिरस्तसकलसुरलोका, मध्यभागमलंकृत्य स्थिता भारतवर्षस्य, तुषारधवलभित्तिना विशालवप्रेण परिगता प्राकारेण, विपुलसोपानसुगमावतारवापीशतसमाकुला, मनोरथानामपि दुर्विलङ्घेन महता खातवलयेन वेष्टिता, पवनपटुचलितधवलध्वजकलापैश्चतुर्भिरत्युच्चैर्गोपुरैरुपेता, प्रांशुशिखराग्रज्वलत्कनककलशैरमरमन्दिरमण्डलैरुद्भासितचत्वरा, प्रतिदिवसमधिकाधिकोन्मीलन्नीलकान्तिभिरारामैः श्यामायमानपरिसरा, स्फुटविभाव्यमानमरकतेन्द्रनीलवज्रवैडूर्यराशिभिः पृथुलायतैर्विपणिपथैः प्रसाधिता, धृतोद्धुरप्राकारपरिवेषैर्दोलाविभूषिताङ्गणवेदिभिरद्भुताकारैरनेकभूमिकाभ्राजिष्णुभिः सौधैः प्रवर्तिताविरतचन्द्रोदया, कपिलकोपानलेन्धनीकृतसगरतनयस्वर्गवार्तामिव प्रष्टुं भागीरथीमुपस्थितया सरिता सरय्वाख्यया कृतपर्यन्तसख्या, सततगृहव्यापारनिषण्णमानसाभिर्निसर्गतो गुरुवचनानुरागिणीभिरनुल्वणोज्ज्वलवेषाभिः स्वकुलाचारकौशलशालिनीभिरलसाभिर्नितम्बभरवहने तुच्छाभिरुदरे तरलाभिश्चक्षुषि कुटिलाभिर्भ्रुवोः कलहेऽप्यनिष्ठुरभाषिणीभिः कुलप्रसूताभिरलंकृता वधूभिः, इतराभिरपि त्रिभुवनपताकायमानाभिः पादशोभयापि न्यक्कृतपद्माभिरूरुश्रियापि लघूकृ

---

**अस्तीति** । वप्रः प्राकारपीठभूमिः । खातं परिखा । कलापः समूहः, भूषणं वा । चत्वरं चतुष्पथम् । भूमिकाः कक्ष्याः । अनुल्बणं अनुद्धतम् । तुच्छाः कृशाः । पादशोभा चरणकान्तिः, शोभायाश्चतुर्थांशश्च । पद्मं तामरसम्, पद्मा लक्ष्मीश्च ।

तरम्भास्तम्भाभिर्लक्ष्मीमनोवृत्तिभिरिव पुरुषोत्तमगुणहार्याभिर्न पुनरेकान्ततोऽर्थानुरागिणीभिः कुलक्रमागतवैशिककलाकलापवैचक्षण्याभिर्विलासिनीभिर्वितीर्णत्रिभुवनजिगीषुकुसुमसायकसाहायका, ज्ञातनिःशेषपुराणेतिहाससारैः दृष्टसकलकाव्यनाटकप्रबन्धैः परिचितानिखिलाख्यायिकाख्यानव्याख्यानैः सर्वभाषाविचक्षणैः सात्त्विकैरपि राजसभावाप्रख्यातिभिः पूर्वाभिभाषिभिर्गुणग्राहिभिः संतुष्टैः संविभागपरैः परोपकारिभिर्निवासिलोकैः संकुला, सकृतयुगेव सत्पुरुषव्यवहारैः, सब्रह्मलोकेव द्विजसमाजैः, जपानुरागिभिरुपवनैरिव श्रोत्रियजनैः सच्छाया, सर्वाश्चर्यनिधानम्, उत्तरकोसलेषु अयोध्येति यथार्थाभिधाना नगरी ॥

यस्यां च वीथीगृहाणां राजपथातिक्रमः, कुमुदखण्डानां राज्ञा सर्वस्वापहरणम्, सूर्योपलानां मित्रोदयेन ज्वलनम् ॥

तस्यां च भुवनत्रयाश्चर्यभूतायां नगर्याम्, अवार्यभुजबलः, समस्तैकविष्टपाधिपतया तुल्यरेखया वासुकिवासवयोरवस्थितः, व्य-

रम्भास्तम्भः कदलीकाण्डः, तथा रम्भायाः तन्नाम्नोऽप्सरोविशेषस्य स्तम्भः सौन्दर्यहर्षप्रयुक्तं जाड्य गर्व इति यावत् । राजसभावः रजोगुणविशिष्टत्वम्, पक्षे राजसभा राज्ञां सभा च । जपानुरागिभिः मन्त्रजपेष्वासक्तैः, जपाकुसुमैररुणवर्णैश्च । छाया कान्तिः, अनातपश्च ।

**यस्यामिति** । राजपथः राजवीथी, राजाज्ञा च । राज्ञा चन्द्रेण, नृपेण च । सर्वस्वापहरणं सर्वेषां स्वानां धनानां अपहरणम्, सर्वस्य स्वापस्य निद्रायाः मुकुलीभावस्येत्यर्थः अपहरणं विकासनमिति यावत् । मित्रः सूर्यः, मित्रं सुहृत् ।

**तस्यामिति** । विष्टपं लोकः । तुल्यरेखया समानत्वेन । यथा वासुकिर्वासवश्च समस्तस्यापि पातालस्य स्वर्गस्य चैकस्य लोकस्याधिपः, तथा अयमपि सम-

वस्थापितवर्णाश्रमधर्मः, प्रतिपक्षाणामान्तराणामनन्तराणां च विनेता, प्राप्तदैवपुरुषकारानुगुण्यः, षाड्गुण्यप्रयोगचतुरः, चतसृष्वपि विद्यासु लब्धप्रकर्षः, सर्वलोकानां विशेषज्ञोऽपि समदर्शनः, विशालहृदयासादितस्वेच्छावकाशयेवातिदूरप्रसृतया प्रज्ञया सम्यग्ज्ञातहेयोपादेयविभागः, गगनाभोग इव शशिभास्कराभ्याम् अच्युत इव शङ्खचक्राभ्याम् अम्भसां पतिरिवामृतबाडबाभ्याम् अभिरामभीषणो यशःप्रतापाभ्याम्, इन्दुविमलाभिर्व्याप्तभुवनान्तरालो गुणपरम्पराभिः, उच्चापशब्दः शत्रुसंहारे न वस्तुविचारे, अकृतकारुण्यः करचरणे न शरणे, शत्रुघ्नोऽपि विश्रुतकीर्तिः, अशेषशक्त्युपेतोऽपि सकलभूभारधारणक्षमः, सर्वसागरैरिवोत्पादितगाम्भीर्यः, सर्वमुनिभिरिव निर्मितोपशमः, पृथ्वीमय इव स्थैर्ये, तिग्मांशुमय इव तेजसि, सरस्वतीमय इव वचसि, सुधामय इव माधुर्ये, तपोमय इवासाध्यसाधनेषु, अनर्तितो लक्ष्मीमदविकारैः, अनाकृष्टो विषयग्राहैः सार्वभौमो राजा मेघवाहनो नाम ॥

यश्च संगरश्रद्धालुः अहितानामुन्नत्या तुतोष, न प्रणत्या; दानव्यसनी जनानामर्थितयाप्रीयत, न कृतार्थतया; कुशाग्रीयबुद्धिः कार्याणां वैषम्येण जहर्ष, न समतया; विनयचिकीर्षया

---

स्तस्य भूलोकस्यैकस्याधिपतिरिति त्रयोऽप्यनेन प्रकारेण समाना इति भावः। अनन्तराः स्वदेशप्रत्यासन्नाः, सामन्ता इत्यर्थः। उच्चापशब्दः उद्गतचापध्वनिः, उच्चाः अधिकाः अपशब्दाः अपभ्रंशाः यस्य स च। अकृतकारुण्यः अकृतकं स्वाभाविकं आरुण्यं यस्य सः, अकृतं कारुण्यं दया येन स च। विश्रुतकीर्तिः श्रुतकीर्तिरहितः, श्रुतकीर्तिरिति रामसोदरस्य शत्रुघ्नस्य पत्नी। विश्रुता प्रसिद्धा कीर्तिर्यस्य स च। अशेषा समस्ता। शेषः सर्पराजः।

विनयचिकीर्षा विनयसंपिपादयिषा। चिनोतेः सनि 'विभाषा चेः' इति कुत्वम्।

शितमतिर्गुरूणां कोपेन मुमुदे, न प्रसादेन ; सकलाधर्मनिर्मूलनाभिलाषी कलेरवतारस्योदकण्ठत ; न कृतयुगस्य ॥

यस्य च प्रताप एव वसुधा मसाधयत् , परिकर एव सैन्यनायकाः ; आकार एव प्रभुतां शशंस, परिच्छदश्छत्रचामरग्राहाः ; धार्मिकतैव दुरितानि प्रतिचकार, प्रपञ्चः पुरोधसः ; प्रज्ञैव मन्त्रान्निश्चिकाय, शोभा मन्त्रिणः ; त्याग एव दिक्षु कीर्तिमगमयत् , विभवो वन्दिपुत्राः ॥

यस्मिंश्च राजन्यनुवर्तितशास्त्रमार्गे प्रशासति वसुमतीम् , इक्षूणां पीडनम् , पदानां विग्रहः, कुकविकाव्येषु यतिभ्रंशदर्शनम् , वैशेषिकमते द्रव्यस्य प्राधान्यं गुणानामुपसर्जनभावो बभूव ॥

यस्य दोष्णि स्फुरद्धेतौ प्रतीये विबुधैर्ध्रुवः ।
बौद्धतर्क इवार्थानां नाशो राज्ञां निरन्वयः ॥

दृष्ट्वा वैरस्य वैरस्यमुज्झितास्त्रो रिपुव्रजः ।
यस्मिन्विश्वस्य विश्वस्य कुलस्य कुशलं व्यधात् ॥

स राजा बाल एवाधिगतराज्याभिषेकः सकलभुवनाभिभाविना भुजबलेन निर्जित्य सप्ताम्बुराशिरशनाकलापां काश्यपीम् ,

---

**यस्मिन्निति** । विग्रहः विग्रहवाक्यम् , कलहश्च । यतिभ्रंशः संन्यासिनः स्वधर्माच्च्युतिः, यतेः छन्दःशास्त्रोक्तस्य नियतस्थानविरामस्य भ्रंशश्च । द्रव्यं धनम् , पृथिव्यादि च । गुणाः सौशील्यादिगुणाः, पारिभाषिका रूपरसादयश्च ।

**यस्येति** । हेतिहेतुशब्दयोः सप्तम्यां 'हेतौ' इति रूपम् । दोष्णि बौद्धतर्के इव स्फुरद्धेतावित्यन्वयः । प्रतीये ज्ञातः । निरन्वयः निर्वंशः, पक्षे निःसंबन्धः निःशेष इति यावत् ।

**दृष्ट्वेति** । विश्वस्य विश्वासं कृत्वा । विश्वस्य समस्तस्य ।

समारोपितस्वनामवर्णश्रेणीकानारोप्य दिशामष्टानामपि पर्यन्तेषु जयस्तम्भान, उपार्जितप्रभूतकोशं वशीकृतसमस्तसामन्तं समग्रमपि राज्यम् आजन्मनः प्ररूढपरमसौहृदस्य हृदयस्येवातिविश्वसनीयस्य प्रज्ञावतां धौरेयस्य विदितनिःशेषनीतिशास्त्रसंहतेरमात्यवर्गस्यायत्तमकरोत् । आत्मनापि निःशेषितारिवंशतया विगतशङ्कः, स्वधर्मव्यवस्थापितवर्णाश्रमतया जातनिर्वृतिः, नवयौवनेनोपदर्शितेष्विन्द्रियग्रामहारिषु विषयेषु परिभोगलालसं मानसमासञ्जयामास ॥

तदा च यदुचितं यौवनस्य, रुचितं चित्तवृत्तेः, अबाधकं लोकद्वयस्य— अविकलतया विवेकस्य, स्थिरतया कुलाभिमानस्य, स्वभ्यस्ततया विनयस्य, यथा न धर्मः सीदति, यथा नार्थः क्षयं व्रजति, यथा न राजलक्ष्मीरुन्मनायते, यथा न कीर्तिर्मन्दायते, यथा न प्रतापो निर्वाति, यथा न गुणाः श्यामायन्ते, यथा न श्रुतमुपहस्यते, यथा न परिजनो विरज्यते, यथा न मित्रवर्गो म्लायति, यथा न शत्रवस्तरलायन्ते, तथा— तदपरमपि सर्वमन्वतिष्ठत ॥

सेवकानुरागस्य संरक्षणाय च वितीर्णसर्वावसरमन्तरान्तरा सभामण्डपमध्यास्त । धर्मपक्षपातितया च देवद्विजातितपस्विजनकार्येषु महत्सु कार्यासनं भेजे । पौरलोकपरितोषहेतोश्च वसन्तादिषु सविशेषप्रवृत्तोत्सवां निर्गत्य नगरीमपश्यत् । निसर्गत एवास्य पूर्वपार्थिवातिशायिनी प्रजासु पक्षपातस्य परवशा वृत्तिरासीत् । यतः—स तथा प्रसक्तोऽपि विषयोपभोगसुखेषु, जानन्नपि जागरूकताममात्यानाम्, तासां प्रजानां सुस्थासुस्थोपलम्भाय केनाप्यनुपलक्ष्यमाणविग्रहः स्वयमेव निर्गत्य निशामुखेषु प्रतिगृहं

नगर्यां बभ्राम। किंवदन्तीशुश्रूषया च संनिविष्टा विशिष्टजनगोष्ठीर्जगाहे। राजव्यापारकथाप्रक्रमे च पौराणामाशयपरीक्षार्थमवनीपतेरमात्यस्य तदधिकृतानां च यथासंभवं परिकल्प्य दोषानुदकीर्तयत्। तैश्च प्रशान्तनिखिलोपद्रवतया सर्वदा सुखितैः स्वामिसचिवाध्यक्षमिथ्यापरिवादश्रवणबद्धामर्षैरप्रत्यभिज्ञानदोषेण परुषाक्षरमधिक्षिप्यमाणः परां मुदमुवाह॥

सचिवलोकोऽपि, श्रुतत्वाद्धर्मशास्त्राणाम्, अकर्कशत्वादाशयस्य, परिज्ञातत्वाच्च प्रभुचित्तवृत्तेः, परिहरन्प्रजाखेदम्, अखिलान्यपि राजकार्याणि चक्रे॥

एवं च राज्ञः परित्यक्तसकलभुवनचिन्ताभारस्य अनन्तभोगलालितमूर्तेरतर्कित एव भूयान् जगाम कालः। भूयसा च कालेन, यत्किल लोके प्रसिद्धं महीभुजामपि योग्यम्, अखिलमपि तत्प्रायेण जीवलोकसुखमनुबभूव। केवलमात्मजाङ्गपरिष्वङ्गनिर्वृतिं नाध्यगच्छत्। **समग्राण्यपि कारणानि न प्राग्जन्मजनितकर्मोदयक्षणनिरपेक्षाणि फलमुपजनयन्ति**। यतोऽस्य नूतनेऽपि वयसि, महत्यप्यन्तःपुरे, बहुनापि कालेन नैकोऽप्युदपादि तनयः॥

क्रमादतिक्रामति च यौवने, जरठतालिह्यमानवपुषस्तरोरिव त्रुटति कुसुमेषुरसे, पल्लवस्येवाविर्भवति वैराग्ये, अपत्यमुखदर्शनं प्रति निराशस्य, 'राजन्, अध्वरस्वाध्यायविधानादानृण्यं गतोऽसि

---

**एवं चेति**। कर्मोदयः कर्मफलं कर्मपरिपाको वा। उदपादि उत्पन्नः। 'चिण् ते पदः' इति कर्तरि लुङि चिण्।

**क्रमादिति**। कुसुमेषुः मन्मथः। पक्षे कुसुमैः इष्वति भिन्नं पदम्। जरठतेति विशेषणं पल्लवेऽप्यन्वेति। वैराग्यं वितृष्णता, रक्तिमाभावश्च।

नः ; पितॄणामपि गच्छ ' इति याचितप्रसूतेरिव प्रादुर्भूतधर्मवासनतया संनिहितैर्देवर्षिभिः, 'वत्स, निवापदानैरिदानीमायुष्मता संभाविताः स्मः प्रभूतं कालम् ; अग्रतस्तु का गतिरस्माकम् ' इति मुहुर्मुहुरुच्यमानस्येव स्वप्नेषु पितृभिः, 'नाथ, कस्यचित्काचिदस्ति गतिः, अहमेव निर्गतिका ; कुरु तत् सांप्रतं यदुचितम् ' इति सखेदया संतानार्थमभ्यर्थितस्येव भुजलग्नया भुवा, 'देव, त्वद्वंश्येन गोप्त्रा विना कालान्तरे बलवदरातिहठावलुप्यमानाभिः शरणाय कः समाश्रयणीयोऽस्माभिः ' इति विज्ञापितस्येव चित्तस्थिताभिः प्रजाभिः, 'विद्वन्, किमपरैस्त्रातैः ; आत्मानं त्रायस्व पुंनाम्नो नरकात् ' इति सोत्प्रासं शासितस्येव गुरुकृतेन श्रुतिधर्मेण, मर्मदाही मुर्मुर इव प्रादुरभवदस्य चेतसि चिन्तासंज्वरः । येन ताप्यमानो गुणानुरक्तयापि राजलक्ष्म्या नारमत । दृष्टवंशवृद्धिषु न नाम स्वबान्धवेषु, धर्मारण्येष्वपि दृष्टिं ददौ । अपत्यपरिवारनिर्वृतेभ्यो न परं पौरेभ्यः, पशुभ्योऽपि स्पृहयांचकार ॥

तस्य च राज्ञः सकलभुवनाभिनन्दितोदया द्वितीयाशशिकलेव द्वितीया, नाभिचक्रादपि गम्भीरेण कुचमण्डलादप्युन्नतेन जघनस्थलादपि विशालेन भुजलतायुगलादपि सरलेन कपोललावण्यादपि स्वच्छेन महतामाहितप्रमोदा मानसेन, निधानेन गुणानां प्रधानेन सर्वालंकाराणाम् अतिदुरापेण इतरप्रमदाभिः सर्वदा हृदिस्थेन हारेणेवापरेण परं शुद्धिशालिना शीलेन अलंकृता, भाग्यसंपत्तिरिव सौभाग्यस्य, पुण्यपरिणतिरिव लावण्यस्य, संकल्पसिद्धि-

उत्प्रासः सावज्ञहसनम् । शासितपदं प्रकृते कथंचित्समर्थनीयम् । मुर्मुरः तुषानलः । वंशः कुलम्, वेणुश्च ।

रिव संकल्पयोनेः, शरत्कालागतिः केलिकलहंसीनाम्, समस्तान्तःपुरशिरोरत्नभूता मदिरावती नाम देव्यभवत् ॥

यस्याश्च पुरतो विशुद्धाचारायाः सुरापगेति लोके लब्धसंभावना पावनतया न परभागं प्राप गङ्गा; प्रीतिप्रतिपक्षभूता सकललोकगणदर्शनीयायास्तृणं गणनायां रतिः; अधिकमलमात्मानं धारयन्ती शुचितया न काचित्सरस्वती; मकरध्वजविनाशहेतुः सौभाग्यभङ्गिविचारे रेणुः अचलकन्या; धनविसरकृतार्थीकृतप्रणयिसार्थाया गत्यभावेन गृहीतरत्नाकरवेला कलयापि न समाना मेदिनी; पर्यन्तज्वलितरत्नदीपमहार्हतल्पशायिन्या निशि तमसि पट्टमधिशयाना न लेशेनापि सदृशविभवा बभूव राजलक्ष्मीः ॥

या च परां कोटिमारूढा स्वामिभावस्य सर्वदा सत्त्वे स्थिता, असत्यनिर्मुक्ता स्वप्नेऽप्यजातस्वैरिणीसङ्गा, निरपत्या सततमुत्सङ्गेन लालिता पत्या ॥

---

**यस्याश्चेति** । सुरापगा देवानां नदी, सुरापं मद्यपायिनं गच्छति या सा च । संभावना प्रवादः । परभागः उत्कर्षः । भूतं प्रमथगणः, प्राणिजातं च । शिवस्य विरोधित्वेन तदीयानामपि विरोधिता । तृणमपि हि प्रेमास्पदत्वाभावेन प्रीतिप्रतिपक्षभूतम् । गणः समूहः, प्रमथगणश्च । 'तृणगणनायाम्' इति पाठोऽपि नासमीचीनः । अधिकमलं नितरां मलविशिष्टम् । पक्षे, पद्मे इत्यर्थः । विभक्त्यर्थे अव्ययीभावः । न काचित्, सरस्वती शुचित्वविषये गणनीयैव न भवतीत्यर्थः । मकरध्वजः मन्मथः, समुद्रश्च । समुद्रं स्थलीकर्तुं रेणुभिः किल भाव्यमिति श्लेषेण एवमुक्तिः । 'संप्राप्तं मकरध्वजेन मथनम्' इति रत्नावली । गतिः गमनम्, उपायश्च । रत्नाकरवेला समुद्रकूलम्, कस्यचित् धनिकस्य समयश्च । कलयापि लेशेनापि । पट्टं फलकं चतुष्पथं वा । पक्षे, निशितं असिपट्टमिति च्छेदः ।

**या चेति** । स्वामिभावः प्रभुता, पत्युरनुरागश्च । सर्वदासत्वं सर्वेषामपि भृत्यता । विरोधपक्षे एवम् । परिहारे तु सर्वदा सत्त्वे इति च्छेदः । सर्वदा

एकदा च राजा, याममात्रे वासरे, समुच्छ्रितानेकभूमिकस्य भद्रशालनाम्नो महाप्रासादस्य पृष्ठे समुपविष्टः समीपदेशोपविष्टया सह तया प्रस्तुतालापः, सहसैवान्तरिक्षेण दक्षिणापथादापतन्तम्, उद्द्योतितसमस्तान्तरिक्षमार्गम्, प्रचण्डपवनेरितरेणुपटलमिव सुवर्णद्वीपस्य, वैश्रवणरत्नकोशदर्शनकुतूहलादलकापुरीमुच्चालितमन्तरात्मानमिव रोहणाचलस्य, तप्ततपनीयपिङ्गलेन समन्ततः प्रसर्पता देहप्रभाप्रवाहेण संतर्पयन्तमिव क्षीणातपं दिवसम्, त्रयीमिव महामुनिसहस्रोपासितचरणां त्रिभुवनसृष्टिमिव प्रकटोपलक्ष्यमाणब्रह्मसूत्राम् अचिरपरिणतामङ्गलक्ष्मीं दधानम्, अञ्जनत्विषा निजशरीरच्छायापुरुषेण दक्षिणेतरभागवर्तिना सदृशवेषाकारधारिणानुगम्यमानम्, अर्धपथदृष्टसिद्धसादरोत्सृष्टाभिरायामिनीभिरर्घकुसुमस्रग्भिः समन्ततो जटिलीकृतेन दुरुत्तरभवकूपनिपतितप्राणिसार्थोद्धरणार्थमधःप्रवर्तितपुण्यरज्जुनेव स्वभावमृदुना चरणद्वयेन द्योतमानम्, नदीतटतरुमिव स्फुटोपलक्ष्यमाणजटम्, क्षेत्रगणितमिव लम्बभुजकर्णोद्भासितम्, अम्बिकायौवनोदयमिव वशीकृतविषमाक्षचित्तम्, निष्परिग्रहमपि सकलत्रम्, भूतापद्द्रुहकमम्बुधरागमं साधुमयूरा-

सर्वास्मिन् काले, सकलप्रदा वा । असत्यानिर्मुक्ता असतीभिः स्वैरिणीभिः अनिर्मुक्ता, असत्येन मिथ्यावादेन निर्मुक्ता च । लालितापत्या इति विरोधपक्षे एकं पदम् । परिहारे तु लालिता पत्या इति पदद्वयम् । पत्या भर्त्रा उत्सङ्गेन लालितेत्यर्थः ।

**एकदेति** । चरणः पादः, वेदशाखा च । ब्रह्मसूत्रं यज्ञोपवीतम्, विधातुर्व्यवस्था च । अधःप्रवर्तितपुण्यरज्जुनेति बहुव्रीहिः । अर्घकुसुमस्रक्षु तादृशपुण्यरज्जुत्वोत्प्रेक्षा । ‘ जटा लग्नकचे मूले ’ । लम्बभुजकर्णाः पारिभाषिका रेखाविशेषाः । प्रकृते तु स्पष्टोऽर्थः । सकलत्रः कलत्रेण भार्यया सहितः, सकलान्

णाम्, दुर्विषहतेजसं महामन्त्रमनङ्गविकाराशीविषाणाम्, आचारमिव चारित्रस्य, प्रज्ञानिर्वाहमिव ज्ञानस्य, शुद्धिसंचयमिव शौचस्य, धर्माधिकारमिव धर्मस्य, तैजसं मूर्त्या, पावनं चरितैः, आप्यं पुण्यैः, पार्थिवमतीतकालावस्थया, विद्याधरमुनिमपश्यत् ॥

दृष्ट्वा च तमदृष्टपूर्वमुपजातकुतूहलो विस्मयस्तिमितदृष्टिरुपरतनिमेषतया दर्शनप्रीत्युपार्जितेन पुण्यराशिना तस्यामेव मूर्तावाविर्भूतदिव्यभाव इव मुहूर्तमराजत । अभिमुखीभूतं च तं प्रासादस्य, सुदूरविकासितमुखः समं मदिरावत्या प्रत्युज्जगाम ॥

**धार्मिकजनानुवृत्त्यभिमुखानि हि भवन्ति सर्वदा धर्मतत्त्ववेदिनां हृदयानि** । यतः— स तं तथाकृताभ्युत्थानम् आदरातिशयपुनरुक्तस्वागतम् उपारूढप्रौढपुलकप्रकटितान्तःप्रीतिम् उत्पक्ष्मलोचनयुगललक्ष्यीकृतमुखम् अग्रतः सपरिग्रहमवलोक्य, समुपजातपक्षपातो विसृज्य मुनिभावस्य सहभाविनीं निरपेक्षताम्, अपेक्षितनिजप्रयोजनो जन इवेतरस्तरसा अभिमुख्यभवत्; अवातरच्चाम्बरतलात् ॥

उपरितनकुट्टिमन्यस्तचरणं च तमुपसृत्य सविनयम्, अवनीपतिः प्रगुणीकृतार्घपात्रो विधाय विधिसंपादितया सपर्यया सानन्दम्, आनन्दपर्यश्रुलोचनः प्रणम्य स्वयं समुपनीते सुराज्या दूर-

त्रायते रक्षति यः स च । भूतापद्रुहकः भूतानां प्राणिनां अपद्रुहकः द्रोहकर्ता न, पक्षे भूतापं द्रोग्धि यः सः । तेजः कान्तिः, मन्त्रशक्तिश्च ; पावनः पवित्रः, पवनसंबन्धी च । आप्यः प्राप्यः, जलमयश्च । अपां विकार इत्यर्थे अणि ततः स्वार्थे ष्यञ् । पार्थिवः राजा, पृथिवीविकारश्च ।

दर्शितादरया मदिरावत्या निजोत्तरीयपल्लवेन प्रमृष्टरजसि हेमविष्टरे न्यवेशयत् ॥

कृतगृहागतमहर्षिसमुचितसमस्तोपचारश्च तं गुरुमिवाधिदैवतमिवोपास्य, सुचिरमास्यनिहितनिश्चलचक्षुरवनीतलोपविष्टः सप्रश्रयमुवाच— 'भगवन्, एष तावदभ्रंकषाग्रशिखरस्तुषारगिरिरिव गङ्गास्रोतसा गगनमण्डलादवतीर्य मुनिगणमाननीयेन गुरुतां परामारोपितः प्रासादस्त्वया ; तदनु सर्वतः कृतावलोकनेन स्वच्छशिशिरैः शान्त्युदकशीकरैरिव दृष्टिपातैर्दूरीकृतो दुरितराशिरस्य समग्रस्यापि नगरीनिवासिनो मत्परिग्रहस्य। प्रणामसमये च मूर्धानमधिरोपितेन प्रकृतिपूतेन निजपादपांसुना संपादितमखिलतीर्थस्नानफलम् । एवं च सामान्येन सर्वतः समुपजातमप्यसंजाततृप्तिरधिकतरकल्याणसंपल्लाभाय भगवता क्रियमाणमिच्छाम्यात्मनो विशेषेणानुग्रहम् । इदं राज्यम्, एषा मे पृथिवी, एतानि वसूनि, असौ हस्त्यश्वरथपदातिप्रायो बाह्यः परिच्छदः, इदं शरीरम्, एतद्गृहम्, गृह्यतां स्वार्थसिद्धये परार्थसंपादनाय वा; यदत्रोपयोगार्हम् ।'

इति व्याहरन्तं च तं समुपजातहर्षो महर्षिरुवाच— 'महाभाग, सर्वमनुरूपमस्य ते महिमातिशयतृणीकृतवारिराशेराशयस्य । केवलमभूमिर्मुनिजनो विभवानाम् । विषयोपभोगगृध्नवो हि धनान्युपाददते । मद्विधास्तु संन्यस्तसर्वारम्भाः समस्तसङ्गविरता निर्जनारण्यबद्धगृहबुद्धयो भैक्षमात्रभावितसंतोषाः किं तैः करिष्यन्ति । ये च सर्वप्राणिसाधारणमाहारमपि शरीरवृत्तये गृह्णन्ति, शरीरमपि धर्मसाधनमिति धारयन्ति, धर्ममपि मुक्तिकारणमिति बहु मन्यन्ते, मुक्तिमपि निरुत्सुकेन चेतसाभिवाञ्छति;

ते कथमसारसांसारिकसुखप्राप्त्यर्थमनेकानर्थहेतुमर्थं गृह्णन्ति। परार्थसंपादनमपि धर्मोपदेशदानद्वारेण शास्त्रेषु तेषां समर्थितम्; नान्यथा। तदलमत्र निर्बन्धेन। कथय तावत्केयमुपहसितसुरलोकरामणीयका नगरी। कश्चास्यां महाभागस्त्वम्। कतमं च महापुरुषवंशमात्मोत्पत्त्या स्पृहणीयतमतां नीतवानसि। का चेयं पुण्यभागिनी सिंहलद्वीपभूमिरिव रत्ननिवहस्य पात्रमकृत्रिमस्य विनयादिगुणगणस्य, पार्श्ववर्तिनी भवतः। किं चाभिधानमस्याः। किंनिमित्तं च कोटरोदरनिमग्नदावाग्निमुर्मुर इव महाद्रुमः, सान्तस्ताप इव लक्ष्यते भवान्। इयमपि च कल्याणी किमिति म्लानदेहा पाणितलसंक्रान्तकज्जलकलङ्कपिशुनिताश्रुप्रमार्जना सद्योविरतेव रोदनाद्विज्ञायते। कच्चिन्न संपन्नः प्रयत्नसंरक्षितस्यार्थस्य कस्यचिदतर्कितो विनाशः। कच्चिन्न जातः केनापि प्रेमैकनिबन्धनेन बन्धुना सह प्रवासादिकारणसुलभो विप्रलम्भः। कच्चिन्न संभाविता दुर्लभता चिरं हृदि स्थापितस्य कस्यचिन्मनोरथस्य। कथय यदि नातिरहस्यं श्रवणार्हं वास्मद्विधानाम्॥'

इति कुतूहलाकृष्टेन पृष्टो महर्षिणा क्षोणीपतिरवोचत्—"भगवन्, सकलदुःखितप्राणिवत्सलानां परमवाङ्मनःकायसंयमवतां सर्वदा परोपकारप्रवणवृत्तीनां भवादृशामपि किमु रहस्यमश्रावणार्हमस्ति। एष विज्ञापयामि—असावस्य सकलस्यापि भारतवर्षस्य चूडालंकारभूता अयोध्याभिधाना पुरी। अहमपीक्ष्वाकुकुलसंभवो भोक्तास्य कियतोऽपि भारतक्षेत्रस्य मेदिनीपतिर्मेघवाहनाख्यः। इयमप्युपजातजन्मा महति मूर्धाभिषिक्तक्षत्रियान्ववाये सर्वान्तःपुरप्रधानभूता मदिरावती नाम प्रेमपात्रं मे कलत्रम्। अनया अस्माकमविकला

त्रिवर्गसंपत्तिः, अनुद्वेजको राज्यचिन्ताभारः, सफलं यौवनम्, रमणीयो जीवलोकः, माननीया मन्मथाज्ञा, पालनीया गृहस्थाश्रमस्थितिः। अस्वस्थताकारणं च आवयोर्नाल्पमप्यपरमस्ति मुक्त्वैकमनपत्यतादुःखम्। तत्तु दैवादतिशयेनासह्यतां गतम्। तथा हि—अशक्यप्रतीकारेण प्रतिक्षणमनेन जनिततीव्रहृदयव्यथावेगयोः शतयामा इव प्रयान्ति नौ विभावर्यः। एवं च यत्समादिष्टं तदुदितम्। रुदितनिमित्तमप्यमुष्याः कथयामि— अद्य क्षपाचरमयामे क्षणमात्रलब्धक्षीणनिद्रोऽहमासादितावसरेण यामाङ्करक्षेणेव समुपेत्य सत्वरमपत्यचिन्तासंज्वरेण विहितसांनिध्यः, बौद्ध इव सर्वतः शून्यदर्शी, संतानसिद्ध्यर्थमात्मनस्तांस्तानुपायानितस्ततोऽन्वेषयन्, उषःकालकृत्यावेदनाय प्रविष्टेन वन्दिना मसृणमुपगीयमानमिदमपरवक्त्रमश्रृणवम्—

'विपदिव विरता विभावरी नृप निरपायमुपास्स्व देवताः।
उदयति भुवनोदयाय ते कुलमिव मण्डलमुष्णदीधितेः॥'

श्रुत्वा चोपजातहर्षश्चिन्तितवान् — 'अहो महात्मनानेन मागधपुत्रेण यदृच्छयापि गायता इदमपरवक्त्रम् आवेदितः करणीयमूढस्य मे कार्यसिद्ध्युपायः। तदिदमेवाङ्गीकरोमि सारस्वतमस्योपदेशवचनम्; आराधयामि गत्वा अरण्यमुपनतशरण्यां कामपि प्रख्यातां देवताम्' इत्युत्थाय च यथाक्रियमाणं पौर्वाह्णिकानुष्ठानमनुष्ठाय, अधिरुह्यान्तःपुरप्रासादमिमम्, अस्याश्चित्रशालिकायाः प्राङ्गणवितर्दिकोपविष्टां समाश्लिष्य देवीमिमां सदुःखमवदम् —'देवि, त्वदपत्यसंततिनिमित्तमितो मया गत्वा अरण्यम्, आ वरप्रदानाद्देवताराधनं कर्तुमध्यवसितम्। यावच्च सिद्धप्रयोज-

नोऽहमागच्छामि, तावत्त्वया शुश्रूषमाणया गुरुजनमिह स्थातव्यम्' इति ॥

निशम्य चेदमश्रुतपूर्वमतिदुःसहं वचनमस्माकम्, अकस्मादेव मूर्छितेयम्। उच्छिन्नसंज्ञा च तिर्यक्पतन्ती सत्वरेणोपसृत्य धारिता परिजनेन। स्थित्वा च क्षणं समाश्वस्ता। निःश्वस्य चातिदीर्घम्, इदम् अपारदुःखभारभिद्यमानगलसरण्या गदितम् अनया स्वरेण गद्गदेन स्वैरम्—'आर्यपुत्र, संतानकार्यसिद्धये तव प्रस्थितस्य नाहं परिपन्थिनी। किं पुनरिदं विज्ञापयामि— यथा तव, तथा ममाप्याराधनीया देवता। एवं च कस्मात्परित्यज्य मामेक एव व्रजसि वनम्। अथ मन्यसे मदीयाराधनेनैव सिद्धं तवाराधनमिति, कस्यात्र संदेहः। किं त्विदानीं त्वमुज्झितापरान्तःपुरिकासमीहितो मत्कृते व्रतं चरिष्यसीति वचनशतैरपि न प्रत्येमि। न च त्वया विरहिता मुहूर्तमपि स्थातुं शक्नोमि। तदवश्यं मयापि गन्तव्यमरण्यम्। अवमन्य चेद्गच्छसि माम्, गच्छ। सिध्यतु तवाभीष्टम्। दृष्टस्त्वमधुनैव।' इत्यभिदधाना ललाटविलुलितविश्रृङ्खलालकपद्धतिरधोमुखीभूता। भूयोऽप्यनुबध्यमानया च निषिध्यमानया च निःशब्दं रुदितमनया, न पुनः किंचिदुदितम्। तदियमस्थान एवात्मानुगमनेन कुर्वती मे गमनभङ्गं भगवतोऽपि युज्यते वक्तुं यथायुक्तम्॥"

इत्युक्तवति पार्थिवे चित्तपरिभाविततदीयोपतापदावदत्तोद्वेगो मुनिस्तत्क्षणमेव योगनिद्रामगात्। उन्मुद्रितेक्षणश्च अनतिचिरेण सप्रहर्षो नृपमुवाच— 'राजन्, मुक्तभूयिष्ठमधुना वर्तते तवापत्यसंततिप्रतिबन्धकमदृष्टम्। मनसि धृतिमाधेहि। मा विधाः स्वल्पमपि

विषादम् । मा समुत्पादय चित्तखेदमस्याः सदा सुखोचिताया निजप्रणयिन्याः प्रतिकूलाचरणेन । मुञ्चारण्यगमनस्पृहाम् । गृहावस्थित एव कुरु देवताराधनम् । अङ्गीकुरु मुनिव्रतक्रियाम् । किं च ते दूरवर्तिनीभिरपराभिर्दुराराधाभिर्देवताभिः । इमामेव प्रकृतिसौम्यां सततसंनिहितामुपास्स्व सकलक्षितिपालकुलदेवतां राजलक्ष्मीम् । इयं हीक्ष्वाकुभरतभगीरथादिभूपालपराक्रमक्रीता त्वदन्वयनिसर्गपक्षपातिनी त्वया धार्मिकेण निगृहीतेन्द्रियवृत्तिना प्रमादपरिहारिणा विधिवदाराध्यमाना नियमात्प्रसादं गमिष्यति ; अभिमतार्थविषयं च वरमचिरेण वितरिष्यति । अमूं च भक्तिप्रवणेन चेतसा गृहाण अपराजिताभिधानामशेषविद्याधरेन्द्रपूजितां विद्याम् । कुरु दिवसस्य रात्रेश्च भागत्रयमशून्यं देवतार्चनेन । अवसाने च तस्य, जपजप्यचरित, समाहितेन चेतसा । भक्तिमज्जनैकचिन्तामणिमिमामवेहि । महाप्रभावासौ प्रयत्नवता पुरुषविशेषेण सततमाराध्यमाना, नास्ति तत्फलम्, यन्न साधयति । फलाभिमुखीभूता च त्रिलोकीपतेः पुरंदरस्यापि चेतो विधेयीकरोति, किमुतापरासां देवतानाम् । केवलं कर्तव्येषु दृढमप्रमादिना भवितव्यम् । आलोचितव्यं च सम्यक्प्रज्ञया प्रस्तावोचितमनुष्ठानम् । प्रज्ञोद्यमावरणिमन्थाविव हविर्भुजः पितरौ कार्यसिद्धेः; तौ हि पुरुषव्यापारानुगृहीतौ, नास्ति तद्वस्तु, यन्न साधयतः ।' इत्यभिधाय कृतपाश्वावलोकनो विहितमन्त्रदेवतानुध्यानस्मरणविधिर्विधाय नरपतेरासनश्च वपुषि रक्षामन्त्राक्षरमयं कवचम्, उपकर्णमूलमनुच्चैरुच्चारिताक्षरपदस्तां विद्यां न्यवेदयत् ॥

---

**इतीति** । इमां अपराजितां नाम विद्याम् । असौ अपराजिता नाम विद्या

राजापि सविनयाबद्धकरसंपुटः श्रद्धावता हृदयेन परमनुगृहीतमात्मानं मन्यमानो विधानतस्तां जग्राह । संज्ञादिष्टपरिजनसंपादितैश्च पुष्पैः फलैः पत्रैरंशुकै रत्नाभरणैश्च भूरिभिः परमया भक्त्या रोमाञ्चिततनुर्मुनिमर्चयांचकार ॥

विरते च पूजाया राजनि पुनः स्वस्थानोपविष्टे, प्रीतहृदयो मुनिः पात्रकृतोपकारतया कृतार्थमात्मानं मन्यमानस्तूष्णीक एव क्षणमात्रं स्थित्वा, किंचिद्विवलितकन्धरो भर्तुः पृष्ठभागे समुपविष्टां विनयनिभृतवपुषं प्रहर्षनिर्भरां मदिरावतीं प्रसादार्द्रया दृष्ट्या सुचिरमवलोक्य सस्मितमवादीत्—'राजपुत्रि, निर्वर्तितस्तावदरण्यगमनादेष ते प्रणयी जनः । नियोजितश्चातिदुष्करे देवताराधनकर्मणि । मा स्म कुप्यश्चेतसि ; यदस्माभिरकृत्वा प्रश्नम्, अश्रुत्वा प्रतिवचनम्, अगृहीत्वानुमतिं महाभागायाः कृतास्य चेतसो नियन्त्रणा, निवारणा च विषयोपभोगसुखानाम् । अत्र च भवत्कल्याणसंपादनसत्वरा चित्तवृत्तिरेवापराध्यति । कल्पश्चायम्, यत् अस्य कतिचिद्दिनानि दूरस्थितयैव कल्याणभागिन्या सर्वापि कर्तव्या भर्तृजनोचिता प्रतिपत्तिः' इत्युक्ते महर्षिणा, मदिरावती त्रपातरलतारया दृशा अवलोक्य पत्युर्मुखमधोमुखी बभूव ।

तां च तथावस्थितां निर्वचनामधःस्रस्ताभिरलकवल्लरीभिराच्छादितकपोलदर्पणां करनखशुक्तिभिरलग्नमपि विलेपनाङ्कं चरणोर्मिकारत्नशकलेषु पुनः पुनरुल्लिखन्तीम्, अवनतग्रीवतया सम्यगविभाव्यमानामपि तत्कालकन्दलितापूर्वशोभाकमनीयस्य मुखचन्द्रस्य चारुतां रत्नकुट्टिमावलम्बिना प्रतिबिम्बेन पिशुनयन्तीं पुनः पुनरवलोक्य कृतस्मितो नरपतिर्मुनिमाबभाषे— 'भगवन्,

किमिति वारं वारमेनां नियमयासि । नन्वेकवचसैव सर्वमवधारितमनया, प्रतिपन्नं च मनसा । करिष्यति चाद्यप्रभृति सर्वं भगवदादिष्टम् । असावपि बुध्यते स्वयं वा अस्मन्मुखेन वा सखीवचनद्वारेण वा विवक्षितं वक्तुम्, अभ्युपगमावेदनेन च भगवतः प्रमोदं जनयितुम्, आत्मनो निर्वहणानिर्वहणे च चिन्तयितुम् । अथ वा न किंचिदुपदिष्टेनानेन । संप्रति प्रस्थिता वनमियम् । गतायां च तत्रास्याम् इह स्थितस्य मे निष्प्रत्यूहमुपजातं देवताराधनम् ।' इत्यभिदधानं च पार्थिवमधिकतरमवनताननना रचितभङ्गुरभ्रुकुटिभूषणेन साभ्यसूयेव चक्षुषा तिर्यगैक्षत ॥

मुनिरपि मनागुपजातहासः 'राजन्, अतिमात्रमुत्सुकस्त्वमिदानीमेव वनमिमां नेतुमिच्छसि । विधेहि तावन्मन्त्रजपविधिम् । आराधितप्रसन्नया राजलक्ष्म्या वितीर्णम् आप्नोतु पुत्रवरमियम् । आसादयतु तत्प्रभावेण भुवनत्रयख्यातमहसमात्मजम् । ततो धृताधिज्यधनुषि भुवनभारधारणक्षमे तत्र निक्षिप्य निजराज्यसंपदं समर्प्य प्रजाः प्रस्थितेन स्वस्थमनसा त्वयैव सहिता गमिष्यति पश्चिमे वयसि वनम् । अस्माकमप्येतदर्थ एवायमारम्भः । अन्यथा गृहस्थकार्येषु सर्वारम्भनिवृत्तानां को यतीनामधिकारः ।' इत्युक्त्वा पुनरवादीत्— 'नरेन्द्र, पुष्करद्वीपादागतेन मयापि जम्बूद्वीपवर्तिषु प्रधानतीर्थेषु संप्रति प्रयातव्यम् । अनुजानीहि माम् ।' इत्यभिधाय संवृतवल्कलांशुको जपन् शनैराकाशगमनदायिनीं विद्याम्, आसनादुत्तस्थौ । अनूत्थितयोश्च तयोरादरकृतप्रणामयोः क्रमेण निक्षिप्य पक्षपातार्द्रतारकं चक्षुः, ईषदुत्क्षिप्तदक्षिणकरः स्फुटाक्षरोच्चारया गिरा दत्त्वाशिषम्, अन्तरिक्षमुदपतत् ॥

अन्तरितदर्शने च तस्मिन्नरणरणकदूयमानः शून्य इव पार्थिवः स्थित्वा मुहूर्तं हर्म्यशिखरादवततार । निर्वर्तितमाध्याह्निकविधिश्च तत्कालकृतसंनिधीनां गुरूणां बान्धवानां बुद्धिसचिवानां च यथावृत्तं सर्वमेव मुनिवृत्तान्तमाख्यन् ; देवताराधानविषये चापृच्छत् । उच्छिद्यमानभरतवंशदर्शननित्योद्विग्नैश्च तैरालोच्य कार्यगौरवमभ्यनुज्ञातः, प्रमदवनमध्य एव संनिधावाक्रीडपर्वतस्य नातिखर्वं नातिविस्तीर्णम् अतिमनोहरतया सुरलोकवासिनामप्युत्पादितनिवासस्पृहं देवतागृहमकारयत् ॥

तत्र चातिप्रशस्तेऽहनि यथायोग्यमर्चितसमस्तपूज्यवर्गः, सर्वप्रतिमालक्षणोपेतां सर्वदोषनिर्मुक्तां भगवत्याः श्रियः प्रतिकृतिं यथाविधि प्रतिष्ठाप्य, प्रतिपन्ननैष्ठिकोचितक्रियो मुनिप्रदर्शितेन क्रमेण प्रतिदिनमुपासांचक्रे ॥

तथा हि— प्रातरेवोत्थाय प्रस्थितो गत्वा कृत्रिमाद्रिपरिसरसरिति गृहीतदन्तधावनो निर्वर्तितस्नानजपविधिः, परिधाय तत्कालधौते दुकूलवाससी, विधाय संध्योपासनकृत्यम् , आगत्यायतनम् , उत्तमाङ्गघटितग्रन्थिनोत्तरीयपल्लवेन मुद्रितमुखो मुखोद्गीर्णमुखरवारिस्रोतोभिः कनककुम्भैः सुचिरमेनामभ्यषिञ्चत् । एणनाभिकर्पूरकणसंतर्पितमोदेन च स्पर्शेन्द्रियहारिणा चन्दनद्रवेण विरचिताङ्गरागां सादरमुत्क्षिप्तकृष्णागुरुक्षोदधूपः प्रणम्य परमया भक्त्या, पुरस्तान्नातिदूरे समुपविष्टो मुखनिविष्टनिश्चलदृष्टिः पुष्टार्थाभिः स्तुतिभिरतिचिरं तुष्टाव । समापितमन्त्रजपविधिश्चातिक्रान्ते कियत्यपि समये विनिर्गत्य देवतागृहात् , दर्शनार्थमागतमुचितस्थानस्थितं गत्वा गुरुजनं ववन्दे । विहितमध्यंदिनावश्यकविधिश्चापराह्णसम-

यानुज्ञातदर्शनेन सर्वग्रन्थार्थवेदिना विद्वज्जनेन सार्धं तैस्तैः कथालापैस्तस्थौ । उपस्थिते च प्रदोषसमये तेनैव विधिना श्रियः पूजोपचारं चक्रे । अन्यदिवसेष्वप्येतदेवान्वतिष्ठत् । एवं च तस्योपरतराज्यचिन्ताभारस्य विरचिताभ्यर्णपर्णशालाकृतस्थितेस्त्रिकालस्नायिनः परिमितफलाहारपरिपालितशरीरस्य कुशतल्पशायिनो मुनिसमुपदिष्टेन विधिना व्रतमपत्यसंततिनिबन्धनमनतिचारं पालयतो गृहीतब्रह्मचर्यस्य दिवसाः कतिचिदतिजग्मुः ॥

एकदा तु विहितमन्त्रदेवतापूर्वसेवः स राजा, पर्वदिवसे विशेषेण निर्वर्त्य देव्याः श्रियः सायंतनीमायतनपूजाम् ; अनुपलक्षितः परिचारकगणेन, नगरबाह्यारामसण्डनमादितीर्थतया पृथिव्यां प्रथितमतितुङ्गशिखरतोरणप्राकारं शक्रावतारं नाम सिद्धायतनमगमत् ॥

प्रविशन्नेव च तस्य द्वारदेशे झटिति दत्तदर्शनम् , अखिलविष्टपत्रयाधिपतिना भगवता स्वयं शक्रेण साकेतपुरनिवेशकाल एव कृतप्रतिष्ठस्य भगवतो युगादिजिनस्य कृत्वा प्रणाममभिमुखमापतन्तम् , अल्पावशेषदेवायुषम् , उज्झितशातकुम्भस्तम्भावदातदेहम् , उचितप्रमाणशालिनाम् अतिभास्वरतया तडिद्दण्डैरिव निर्मितानाम् अङ्गानाम् अनलस्फुलिङ्गपिङ्गलेन गलता समन्ततः प्रभाजालेन ज्वलदनेकदीपिकाचक्रवालमिव मण्डपान्तरालं कुर्वाणम् , अन्तरिक्षगतमप्यतिबहलतया चरणतलप्रभायाः स्पृष्टभूतलमिवोपलक्ष्यमाणम् , गत्युत्कम्पगलितवैकक्षकस्रग्दामरेणुनिश्चलनिलीनैर-

**प्रविशन्निति** । वैकक्षकस्रक् तिर्यग्धारिता माला । श्लक्ष्णं मृदुलं

लिभिः पुनरागमनप्रार्थनापुरःसरमानतायास्त्रिदशलोकश्रियो वियोगाश्रुभिरिव सकज्जलैः कल्माषितेन चरणद्वयेन द्योतमानम्, अग्रतोऽग्रतः श्लक्ष्णपरिमण्डलजङ्घाकाण्डेन मूले मूले स्थूलेन भ्राजमानम् ऊरुस्तम्भयुगलेन, निवसितातिसूक्ष्मदेवार्हवसनम्, उन्निद्रकाञ्चनारविन्दचारुणा आवर्तिना नाभिमण्डलेन अलंकृतप्रतनुमध्यभागम्, वामेन सविलासभुजगतागतद्राघितया तत्क्षणोदितेन्दुलेखाकारया नखमणिप्रभया विराजितेन दक्षिणेन चादिदेवप्रणामसमयस्रस्तस्य कुसुमापीडस्य निविडनाय तिर्यगुन्नमितेन पाणिना बन्धुजीवकचापधारिणः प्रारब्धपृष्ठतूणीरशराकर्षणस्य कुसुमधनुषः स्थानकमङ्गीकुर्वाणम्, आमुक्तमेघमुक्तास्फारमुक्ताफलहारम्, अभिनवजपाकुसुमकान्तिहारिणो हारनायकमणेरुन्मुखीभिर्मयूखलेखाभिः कपिशितोग्रशौचसिचयोत्तरासङ्गम्, अन्तकालनिद्रोदयादीषन्निमिषितस्य दूरविस्तारिणो नयनयुगलस्योन्मेषलीलासु विसर्पता धवलेन प्रभाप्रवाहेण क्षीरमिवोद्गिरन्तम्, उल्लसिताधरप्रभासान्द्रविद्रुमवनम् उद्धूतधवलदीर्घलोचनतरङ्गम् उत्सङ्गितकपोलमुक्ताशुक्तिकान्तम् आक्रान्तोज्ज्वलललाटतटम् आविष्कृतभ्रूलताशैवलवल्लरीकम् आपीतामृतदर्शनदुराशया क्षीरोदसलिलमिव सकलमावासितम् उपहसितशरच्चन्द्रिकाप्रकाशम् आस्यलावण्यमुद्वहन्तम्, अनिलकृतसू-

---

मसृणं वा । परिमण्डलं वर्तुलम् । द्राघिता दीर्घीकृता । गतागताभ्यां वक्रतया स्वयं रक्तिम्ना च नखमणिप्रभायां बन्धुजीवकचापत्वोत्प्रेक्षा । एतदर्थमेव तत्क्षणोदितत्वं उपमानभूतायामिन्दुलेखायां विशेषणम् । पृष्ठतूणीरः पृष्ठे लम्बितः इषुधिः । स्थानकं स्थितिः, सादृश्यं वा । मेघमुक्ताः करकाः । उग्रशौचः अतिशुद्धः । उत्तरासङ्गः उपरिवस्त्रम् । उत्सङ्गिता मध्ये कृता । अधरप्रभादिषु विद्रुमवनत्वादिरूपणं आस्यलावण्ये क्षीरोदसलिलत्वोत्प्रेक्षोपयोगि ।

क्ष्मान्तरालप्रविष्टपटुविलेपनामोदमुषितनिद्रैर्निर्दयचरणप्रणोददलित-दलपुटैरपहायापहाय कमलगर्भशयनानि धावद्भिरुद्यानदीर्घिकामधुकरकुलैः कृततुमुलकोलाहलम्, किंचिदारूढम्लानिना पारिजातकुसुमशेखरेण विराजमानम्, जवागमनखेदादनवरतमुद्वमन्तं श्वासपवनान्, एकं वैमानिकमपश्यत् ॥

आलोकनमात्रेणैव तं प्रति उपजातदिव्यतानिश्चयस्य चक्षुर्निमेषादिलिङ्गदर्शनोन्नीतस्वर्गच्यवनसमयस्य रूपसंपन्निरूपणादात्मनि श्लथीभूतचारुताभिमानग्रन्थेः पार्थिवस्याभून्मनसि— 'अहो प्रभावः सुरलोकभूमीनाम्; यत्र खलु संभूतानि पुण्यभागिनां शरीराण्यप्येवंविधानि भवन्ति; यानि चरमास्वपि दशासु, तावदास्तामुपसर्पितुम्, द्रष्टुमप्यनलमनलमिव वैद्युतं पुमांसः । अस्य वपुषि प्रकामसौम्येऽपि स कोऽपि स्वभावभास्वरः स्फुरति प्रतापः, यस्मिन्नसौ प्रकृतिप्रगल्भापि भीतेव मे न चिरमाबध्नाति लक्ष्यमीक्षणद्वयी । सर्वथा कृतार्थोऽहम्, यस्य मे मर्त्यभावेऽपि प्रकटितदिव्यवपुषा दर्शनमनेन दत्तम् ।' इति विचिन्त्य, मुक्त्वा च सफलकं प्रभुताभिमानेन सार्धं कृपाणम्, आबद्धाञ्जलिः स्तोकमुपेत्य स्वागतमकरोत् ॥

सोऽपि तथा समुपसृत्य तं पुरस्तादवस्थितम् अतिस्तिमितप्रगल्भस्निग्धदृष्टिप्रकटितान्तःप्रीतिम् आबद्धकरसंपुटम्, अतिशयस्पृहणीयदेहावयवदर्शनानन्दनिस्पन्दविकसितेन पुनरपि प्राक्तनीं

---

**आलोकनेति** । उपसर्पितुमिति चिन्त्यम् । उपसृप्तुमिति भाव्यम् । स्वार्थणिजन्तो वा । फलकं खेटकः ।

प्रकृतिमापन्नेनेव चक्षुषा सुचिरम्, उपजातप्रत्यभिज्ञानलव इव सत्वरोपसंहृतगतिः, आचरणयुगलादुत्तमाङ्गं यावदालोकितवान् ॥

आनीतकरसंपुटश्च हेमाद्रितट इव पृथुश्रीवृक्षलाञ्छिते वक्षसि, स्तोकमुपदर्शितस्मितः प्रस्तुतपरीहास इव सलिलनिर्भराम्भोधरनिनादगम्भीरेण स्वरेण मधुरमब्रवीत्— "नरेन्द्र, सर्वदा शरीरसंनिहितैर्निवेदितोऽसि चक्रवर्तिलक्षणैः । स खलु भवान्मध्यमलोकपालो राजा मेघवाहनः, योऽस्माभिः पुरा दिव्यसदसि देवस्य पाकशासनस्य मर्त्यलोकवार्तानिवेदनाधिकारयुक्तैः प्रधाननाकिभिः, एवं जिगीषुः, एवं शूरः, एवं त्यागशीलः, एवं धार्मिक इति बहुप्रकारमङ्कुरितपुलकपक्ष्मलकपोलैरवनिपालकथाप्रक्रमे सुचिरमुपवर्ण्यमानः श्रुतोऽसि । सर्वथा नः कृतार्थं चक्षुरुपजातम् । फलितं च सद्यो देवतादर्शनसमुत्थं पुण्यजातमतर्कितोपनतेनामुना त्वदवलोकनेन । गच्छामि सांप्रतम् । अनुजानीहि माम् । जानीहि च मदीयमपि लेशतो वृत्तान्तम् । अहं हि सौधर्मसुरलोकसद्मा ज्वलनप्रभाभिधानो वैमानिकः । संप्रत्येव नाकतः प्रस्थितो गच्छन्पुरःस्थितेन कियतापि परिजनेनानुगम्यमानो गगनपथेन, पथि विलोक्य लोकान्तरे देवतायतनमिदम्, इदं मनस्यकरवम्— 'हन्त, स एष भगवानशेषजगन्नाभिः, नाभिकुलकरकुलालंकारः, द्रष्टा कालत्रितयवर्तिनां भावानाम्, उपदेष्टा चिरप्रणष्टस्य धर्मतत्त्वस्य, सर्वसत्त्वनिर्निमित्तबन्धुः, सेतुबन्धः संसारसिन्धोः, ऋषभनामा जिनवृषः; यस्य पुरा स्वामिना शक्रेण स्वयमनुष्ठितः प्रतिष्ठाविधिः ।'

आनीतेति । श्रीवृक्षः वक्षसि स्थित आवर्तविशेषः, पक्षे अश्वत्थवृक्षः बिल्ववृक्षो वा । नाभिः प्रधानभूतः । नाभिकुलकरः नाभेयः ।

अवधार्य चैतदधिकोपजातभक्तिः, 'आसतामिहैव मुहूर्तमेकं भवन्तः' इति निवर्त्य पृष्ठानुपातिनः सुरपदातीन्, अतिमात्रमुत्सुको गन्तुमङ्गमात्रेणैवागतः । दृष्टश्चैष भगवानशेषकल्मषक्षयहेतुरादिदेवः । इदानीं गन्ता अहमधिगतनिर्वृतिः, विलक्षणं रामणीयकेन सकलद्वीपानाम्, अपारजलपूरितान्तरिक्षेण सर्वतः कृतपरिक्षेपं नन्दीश्वरोदनाम्ना नदीनाथेन, नन्दीश्वराभिधानं प्रधानद्वीपम् ॥

तत्र मे परममित्रम्, ममैव सदृशप्रभावर्द्धिः, अतिशयेन प्रसादपात्रं वृत्रशत्रोः, अत्युदाररूपबलविभवशाली सुमाली नाम देवः, देवलोकतः कौतुकाकृष्टमनसा स्वयंप्रभाभिधानया देव्या दिव्यवनिताजनादुपश्रुतरम्यतातिशयां जिनायतनविंशतेः श्रियं द्रष्टुमानीतः, सांप्रतमतिशयितनन्दनवनेषु महापुष्करिणीनामुपान्तवर्तिषु विचित्रतरुकाननेषु कान्तासखः क्रीडासुखमनुभवति ॥

अस्ति च द्वीपे तत्र दीपभूता मर्त्यलोकस्य, जिनायतनयात्रासु त्रिदशलोकादुपागतानाममरमिथुनानां निवासस्थानमपरेवामरावती, परमरम्या रतिविशाला नाम तस्य नगरी । सा चाद्य प्रातरेव कौतुकादितस्ततो विचरद्भिरनुचरैर्मदीयैः, तदीयसंनिधावपि अनाथेव उद्ध्वंसितेव प्रणष्टसकलपूर्वशोभा, भूतैरिवाधिष्ठिता, कृतान्तदूतैरिव कटाक्षिता, सर्वतो विजृम्भिताविच्छिन्नमलिनच्छाया, चिन्ताविसंस्थुलगृहस्थगीर्वाणपरिहृतसर्वनिजनिजव्यापारा, रणरणकगृहीतगृहदेवतावनदेवतासदुःखदृश्यमानतत्क्षणम्लानकल्पपादपा, स्थानस्थानपूज्यमानस्विन्नसिद्धायतनदेवताप्रतिमा, प्रतिमन्दिरमाकर्ण्यमा-

अस्तीति । रणरणकः उत्कण्ठा, चित्तावेग इति यावत् ।

नश्रवणदुष्टहाकष्टशब्दा दृष्टा । मन्दिरमपि तदीयमप्रवृत्तोत्सवम्, धृतानुचितवेषनिर्व्यापारनिःशेषकलत्रम्, अप्रमत्तविबुधयोधशतसंरक्ष्यमाणगोपुरप्राकारम्, उद्विग्नसकलपरिजनं दृष्टम् ॥

इदं चारिष्टमतिकष्टमप्रतिविधेयं विधिवशात्तत्रोपजातम्, तस्य तत्कलत्रस्य वा प्रधानस्य अचिरकालभाविनं विनाशमवश्यतया निवेदयति । न हि येषु केषुचिदनर्थोपनिपातेषु, कदाचिदपि दिव्यानामास्पदेषु संपद्यन्ते ईदृशाः पदार्थानां प्रकृतिविपर्ययाः, तत्संनिवासिनां च विबुधलोकानामन्तरत्यन्तशोकातङ्कशंसिनो हृदयायासाः । तेन च मया तत्र गत्वा द्रष्टव्योऽसौ कदाचिदप्यदृष्टदीर्घमद्विरहदुःखः सखा । सुखयितव्यः सर्वकालमभिलषितमदर्शनो निजदर्शनेन । शमयितव्या दिव्यलोकच्यवनसुलभा सर्वभावानां विनश्वरस्वभावतावेदनेन हृदयेऽस्य दाहकारिण्यरतिवेदना । देयो दिव्यशक्त्यनुरोधेन सुगतिसाधनेषु धर्मकार्येषु सविशेषमुपदेशः । ततस्तेन सह पूर्वानुभूतसुखदुःखवृत्तान्तकथाव्यतिकरेण नीत्वा विभावरीमेताम्, विभातकाले कथमपि प्रार्थितपुनर्दर्शनेन पुनरपि प्रतीपं निवर्तितव्यम् । **कर्तव्यं च किमपि कालोचितमकृतकालक्षेपेण ख्यातेः सुखस्य चामुष्मिकस्य साधकं कुशलानुष्ठानम्।** यतो ममापि निष्ठितप्रायमायुः । अल्पावशेषा त्रिदशलोकस्थितिः । उपस्थितो दीर्घकालप्ररूढगाढप्रणयैर्नाकिभिः साकमात्यन्तिको विरहः । क्रोडीकृतं मनुष्यलोकावतारस्मरणपीडया निबिडमन्तःकरणम् । ईदृशे च सर्वतः समुपस्थितातिदुर्वारव्यसनजाते उपजनितसंसारसुखवैमुख्ये विवेकिनाम् उदीरितपरोपकारबुद्धौ उदारचे-

---

**इदमिति** । अरिष्टं अशुभम् । निष्ठितप्रायं भूयसा गतम् ।

तसाम् अतिदारुणे दशापाके, कथंचिदुपजातसंगमस्य सुरपतिप्रशंसाश्रवणदिवसादारभ्य प्रतिदिवसमभिलषितदर्शनप्राप्तेराकारदर्शनेनैव प्रशमितसकलहृदयोद्वेगतमसो महात्मनो न च सर्वात्मना प्रियमकर्तुमन्तःकरणमुत्सहते मदीयम्; मन्दायते च त्रिभुवनातिशायि सत्त्वमलुब्धतां च तावकीं प्रागुपश्रुतां विचिन्त्य, प्रत्याख्यानलाघवमुत्प्रेक्षमाणम् । अतो न शक्नोमि सर्वथैवोपचारक्रियापराङ्मुखो भवितुम्, नापि यथाभिमतवस्तुप्रार्थनाविषयेणाभ्यर्थनेन कदर्थयितुम् । केवलमवलम्ब्य मध्यमं पन्थानमुपरचयामि तेऽञ्जलिम् । अनुगृहाणेमां मनःपरितोषाय मे, नृपचन्द्र चन्द्रातपाभिधानं प्रधानमखिलानामपि स्वर्गभूषणानामासत्तिमात्रेणापि कृतसकलदुरितापहारं हारम् । एष किल क्षीरोदेन परिणतामलकीफलस्थूलनिस्तलानि मुक्ताफलान्यादाय कौतुकेन स्वयं ग्रथितः; कृतश्च स्वयंवरोत्सवानन्तरमसुरारिमन्दिरमाश्रयन्त्याः श्रियो मन्युगद्गदकण्ठेन कण्ठकाण्डमण्डनम् । उपनीतश्च देव्यापि कमलया जन्मनि कुमारजयन्तस्य ज्येष्ठजायेति पुलोमदुहितुः । तयापि कृत्वातिदीर्घकालमात्मनो मण्डनम्, अर्पितः सखीप्रेमहृतहृदयया मत्प्रियायाः प्रियङ्गुसुन्दर्याः कण्ठदेशे । अद्य तु क्वापि धर्म्ये कर्मणि नियुज्य ताम्, आगच्छता मया विरहविनोदार्थमारोप्य कण्ठे, सुहृद्दर्शनोत्कण्ठितेनानीतः । तदेष संप्रति स्वभावधवलरुचिः कालच्छायाकवलितमरुच्येव मोक्तुकामो माम्, अवाप्य कथमपि पुण्यपरिणत्या प्राज्ञया संयोजितं त्वां मुक्तामयवपुषम् अशेषतो मुक्तामयः, त्रासविरहितम् अपेतत्रासः, स्वच्छा-

निस्तलानि वर्तुलानि । कालच्छाया कृष्णा कान्तिः, यमच्छाया च ।

शयम् अतिस्वच्छः, गुणवन्तम् अतिशयोज्ज्वलगुणः, प्राप्नोतु सदृशवस्तुसंयोगजां प्रीतिम् । अस्य हि परित्यक्तसुरलोकवासस्य दूरीभूतदुग्धसागरोदरस्थितेस्त्वद्वसतिरेव स्थानम् । न हि त्र्यम्बकजटाकलापमन्तरिक्षं वा विहाय, क्षीणोऽपि हरिणलक्ष्मा क्षितौ पदं बध्नाति । मयाप्यनन्ययोग्योपभोगां भव्यतामस्य भावयता, दिव्यदर्शनममोघमिति घोषणां जनस्य किंचिच्चरितार्थां चिकीर्षता क्षणमात्रपरिचितमात्मानमीषदनुस्मरणविषयतां नेतुभिलषता, प्रीतिप्रगुणितस्य चात्मनस्तरलतां तिरोधातुमक्षमेण अयमुपनीयते, न पुनरुपकाराय प्रीतये वा । सर्वस्वदानेनापि देहिनामुपकुर्वतः, परेण प्रार्थितां पृथिवीमपि तृणगणनया परित्यजतः, किं तद्वस्तु; यत्प्रदानेन प्रीतिरुपकारो वा भविष्यति भवतः । सर्वथा दत्तोऽयं मया। 'विपत्प्रतीकारासमर्थः क्षीणायुषोऽस्य भिषगिव कथं ऋक्थमाहरामि । अलंकारः क्षत्रियकुलस्य याचकद्विज इव कथं प्रतिग्रहमङ्गीकरोमि' इत्यनेकविकल्पविप्रलब्धमनसा त्वया मनस्विनां वरेण, त्रिदशनाथेऽपि भगवति कदाचिदकृतप्रणयभङ्गस्य मे न कार्यः प्रथमप्रार्थनाभङ्गः । ग्रहीतव्यो निर्विचारेण, यस्मादुपरोधभीरुत्वादगृह्यमाणोऽपि भवता दूरीभूत एवैष मे स्वर्गच्युतस्य । गृहीतस्तु कदाचिन्मनुष्यलोके लब्धजन्मनः पुनरानन्दयति मे दृष्टिम् । इष्टतमदर्शनं चैनम् अमरलोकाच्च्युता कालक्रमेण देव्यपि मे प्रियङ्गुसुन्दरी कदाचिदालोकयति । दर्शनाभ्यासजातपूर्वजातिस्मृतिश्च स्मरति रतिकराण्यसक्तं मया सहोपभुक्तानि स्वर्गवासक्रीडासुखानि ।

---

मुक्तामयः मौक्तिकनिर्मितः, रोगहीनश्च । त्रासः भयम्, मौक्तिकदोषश्च । गुणः सौशील्यादिः, रज्जुश्च । ऋक्थं धनम् । असक्तं अविलम्बेन ।

